न्यसेत्पुरस्तादेकांशं कोणार्द्धार्धप्रमाणतः ॥
भ्रामयेत्कोणमानेन तथान्यदपि मन्त्रवित् ॥ ५४ ॥
सूत्रयुग्मं ततो दद्यात्कुण्डं योनिनिभं भवेत् ॥
चतुरस्रीकृतं क्षेत्रं दशधा विभजेत्पुनः ॥ ५९ ॥

---

विभागः कार्य इति *सुधीरि* त्यनेनोक्तं, तत्रायं पञ्चमोंऽशः ४ अङ्गुलानि सार्द्धषट्यवाः किंचिदूनाः ।।एवं भूतमंशं पुरस्ताद्दक्षिणोदग्गतसूत्रस्योत्तरभागे न्यसेद्वर्द्धयेदिति मन्त्रविदित्यनेनोक्तम् । ततः *कोणार्द्धार्द्धप्रमाणतः कोणमानेन भ्रामयेत* । अत्र कोणशब्देन कोणसूत्रं गृह्यते ॥ तस्यार्द्धं कर्णसूत्रद्वयं मध्यसंपातस्थाने तदर्द्धमपरकोष्ठयुगले द्वितीयकर्णसूत्रयोगस्थानं *तत्प्रमाणत* स्तस्मान्मानात कोणमानेन कोणसंलग्नतया भ्रामयेत् । *प्रकारस्तु* अपरैककोष्ठकर्णसूत्रद्वयसंपातस्थाने सूत्रादि संस्थाप्य मध्यतिर्यग्गतसूत्राग्रं तत्कोणसंलग्नं दक्षिणोदग्गतसूत्रस्य दक्षिणाग्रावधिसूत्राग्रं भ्रामयेत्।*मन्त्रवि*दन्यदपि तथा भ्रामयेदित्यर्थः । तत्रापि प्रकारः द्वितीयापरकोष्ठकर्णसूत्रद्वयसंपातस्थाने सूत्रादि संस्थाप्य मध्यतिर्यग्गतसूत्रस्य द्वितीयाग्रात्तत्कोणसंलग्नं दक्षिणोदग्गतसूत्रस्य दक्षिणाग्रावधिसूत्राग्रं भ्रामयेत् । ततः सूत्रयुग्मं दद्यात् । पार्श्वद्वयस्थवृत्तार्द्धाग्राभ्यां पुरोवर्द्धितसूत्राग्रावधि सूत्रद्वयं पातयेत्। एवं *योनिनिभ*—मुत्तराभिमुखं *कुण्डं भवेत्* । तदुक्तं *कादिमते* । "तन्मध्यपञ्चमांशेन विकास्य ब्रह्मसूत्रकम् । पूर्वतः पश्चिमद्वन्द्वकोष्ठयोर्मध्यदेशतः ॥ तत्कोणमानेन तथा भ्रामयेत्पश्चिमाप्रकान् ॥ उत्तराग्रावधि तथा दक्षिणाग्रावधि प्रिये ॥ तन्मध्यतिर्यक्सूत्रांशद्वयात्रष्टम्भतस्तथा । विकाशितब्रह्मसूत्रावधि सूत्रद्वयं क्षिपेत् ॥ योनिकुण्डमिदं भद्रमि"ति । *कामिकेऽपि* "पञ्चमांशं पुरोन्यस्य मध्ये वेदांशमानतः। भ्रमादश्वत्थपत्राभं कुण्डमाग्नेयमीरितम्" इति।*क्रियासारेऽपि*। "क्षेत्रे पञ्चांशकं कृत्वा पूर्वस्यामेकमंशकम् । न्यस्य तस्मान्न्यसेत् सूत्रे पार्श्वयोर्मध्यमावधि॥ ततः प्रत्यक् पदद्वन्द्वं भ्रामयेत्तदर्धतः । पृथक् पृथक् यथा सम्यक् तथा कोणत्रयावधि ॥ एवं कृते स्थिरं कुण्डं भवेदश्वत्थपत्रवत्" इति ॥ *सिद्धान्तशेखरेऽपि* "योन्याख्यमुच्यते कुण्डमाग्नेय्यामुत्तरामुखम् । प्रजावृद्धौ प्रतापे च शस्तं तत्रापि पूर्ववत् ॥ चतुष्कोष्ठं समं कुर्यादिदं क्षेत्रस्य पञ्चमम् । सोमसूत्रस्य बाह्याग्रे योजयेत् सौम्यभागके ॥ अग्रयोर्गर्भसूत्रस्य न्यसेदंशे च सूत्रकम् । सिध्यत्यनेन यत्राग्रं दक्षकोष्ठद्वयस्य तु । मध्यकोष्ठस्य चान्ते च भ्रामयेत्तद्भ्रमाद्भवेत् ॥ यत्र पृष्ठं सुसंविद्धं पत्रमश्वत्थपत्रवत् । इतीदं योनिकुण्डं स्यादि"ति ॥ *अत्र क्षेत्रोपपत्तिरुच्यते—तत्रैकपार्श्वे अर्धं वृत्तम् । द्वितीयपार्श्वे अर्द्धवृत्तम् । एवमेकं वृत्तक्षेत्रं वृत्तार्द्धद्वयमध्यस्थमधोमुखं त्रिकोणमेकम् ॥ तदुपर्यूर्ध्वमुखं त्रिकोणमेकमिति त्रीणि क्षेत्राणि । तत्र त्रयाणामपि पृथक् पृथक् फलमानीयैकीकृतं योनिकुण्डक्षेत्रफलं भवति । तत्र वृत्तक्षेत्रफलं तावदुच्यते "व्यासस्य वर्गेभनवाग्नि ३९ २७ निघ्ने सूक्ष्मं फलं पञ्चसहस्रभक्ते" इति भास्कराचार्योक्तप्रकारेण वृत्तक्षेत्रफलानयने श्रीधराचार्योक्तिः त्रिशत्यां १७ १/३४ स्थूलेत्युपेक्षिता ॥ तत्रैकाङ्गुलस्य चतुस्त्रिंशांशेनोनानि सप्तदशाङ्गुलानि व्यासः । तदुपपत्तिरेवं "तत्कृत्योर्योगपद" मित्यनेन कर्णप्रमाणमानीय तदर्द्धं व्यासो भवति । इदं त्वग्रे द्विहस्तकुण्डकरणीकथनप्रस्तावे स्फुटीकरिष्यते । तत्र व्यासस्य न्यासो यथा स वर्णितः १७७/३४ अस्य यथोक्तकरणेन जातं क्षेत्रफलम् २२६ एकोयवश्चतस्रो यूकास्तिस्रो १/३ लिक्षाः न्यासांशसवर्णनादिप्रकारस्तु ग्रन्थगौरवभयान्नोक्तः स तु पाटी गणिते लीलावत्यादौ द्रष्टव्यः । ततोऽधस्त्र्यस्रस्य फलं "लम्बगुणं भूम्यर्द्धं स्पष्टंत्रिभुजे फलं भवति" इति भास्कराचार्यप्रोक्तमार्गेण तत्र भूः २४ अङ्गुलानि लम्बः १२ अङ्गुलानि ततोभूम्यर्द्धम् १२ लम्ब १२

त्र्यकोणं स्याद्वेदांशमध्यर्धं च तदन्धिद् ॥
ज्यासूत्रं पातयेदग्रे तन्मानाद्भ्रमयेत्ततः ॥ ५६ ॥

गुणं १३४ । इदमधचन्द्रस्याल्पफलम् ॥ अत चतुरश्रस्य फले सप्त चू २४ अङ्गुलानि ग्रन्थकृ-दुक्तप्रकारेण लब्धः । तत्र मध्यसूत्रार्धम् । १२ अङ्गुलानि । ततोवर्धितपञ्चमांशः २४ उभयोः समच्छेदार्थन्यासः $\frac{१२}{१}$ $\frac{२४}{५}$ समच्छेदौ $\frac{६०}{५}$ $\frac{२४}{५}$ । योगः $\frac{८४}{५}$ । ततोयथोक्तकरणेन जातं क्षेत्रफलं २०३ किञ्चित् (१)न्यूने क्षेत्रफलमध्ये सयवद्वयं चतुरङ्गुलानि न्यूनानि भवन्ति ॥ उदाहृतकाविभक्तादिकुण्डेष्वपि इदमेव फलं ज्ञेयम् ॥ तत्र कश्चित कामिकवचनम् (४६१) एतावत्फलमानीय दूषितवानिति महाभ्रान्त एव । एवं सर्वेषामेकवाक्यत्वे सत्यपि च "भा नहीने पतिते" त्यादिन्यूनाधिकप्रमाणं च—"यजमानविनाशकृदि"—त्यादिदोषापत्तेरिति क्षेत्रफलसाम्यमत्रापन्नमपेक्षितम् । यतो भास्कराचार्यश्रीधराचार्यप्रोक्तगणितमार्गेण क्षेत्रफलानयनद्वाराऽवश्यं कुण्डानि वक्तव्यानि । *क्रियासारे*—"प्राक्कुण्डेयत्प्रमाणं तदन्येषां क्षेत्र-मानक" मिति ॥ ग्रन्थकृतापि तुल्यक्षेत्रफलानयनार्थमेव समचतुरस्रस्य प्रकृतिता निरू-पिता । पञ्चदशशाखोपरि कल्पसूत्रं प्रणीतवतो भगवतः कात्यायनस्यापि परिशिष्टे शुल्वे कुण्ड-वस्तुसिद्धोः श्रीधराचार्यभास्कराचार्यप्रोक्तमार्गेण क्षेत्रफलानयनद्वारैव प्रवृत्तिर्दृश्यते । अतो-ऽवश्यं क्षेत्रफलसाम्यं वक्तव्यम् । तदाचार्येणातिसूक्ष्मगणनायां शिष्यबुद्धिक्लेशो भविष्य-तीत्युपेक्षितम् । साम्प्रदायिकास्तदर्थं यवत्रयप्रक्षेपमाहुरेकहस्ते । तथा क्षेत्रफलसमतार्थं सर्वाङ्गुलप्रकारस्तूच्यते । "चतुर्विंशतिधा मध्यसूत्रं भक्त्वा पुरो न्यसेत् । पञ्चांशाग्रैकैकस्य भीत् त्रिंशांशान् कोणपादतः ॥ वृत्तार्धं स्तो मध्यतिर्यक् सूत्रान्तं च ततोऽर्पयेत् । पुरोवर्धित-सूत्रान्ते सूत्रे द्वे स्याद्भगाकृति" ॥ अनेन प्रकारेण क्षेत्रफलमव्यभिचारीति ज्ञेयम् । अत्र षडङ्गुलानि सयवानि यूकासार्धलिक्षाचतुष्टयसहितानि मध्यसूत्रं वर्धयेत् । तदालम्बः १७। ३।२० लवणितः ३४।३।३० उत्क्रमेण जातं क्षेत्रफलम् ३०१ । षड्यवास्तिलोद्गृन्गः पञ्चलिक्षाः एवमेकीकृतं सर्वक्षेत्रफलम् (२०) ५७६ एतत् सूक्ष्ममितिज्ञेयम् । *यत्तु कादिमते*—"चतुरस्रा-श्रितो या तु त्र्यक्षः स्तुः साम्यतस्थिता । लभ्यते सर्वकुण्डेषु तेन सर्वाणि सर्वतः ॥ तस्समा-न्येव जायन्ते षण्णवत्यङ्गुलात्मना" इति । *सिद्धान्तशेखरेऽपि*—"क्षेत्रस्य चतुरस्रस्य समं सूत्रं चतुर्गुणम् । योन्यादिसर्वकुण्डानां पर्यन्तेषु नियोजयेत् ॥ चतुरस्रं समं सर्वेष्वशुभं योन्या-दिकुण्डकृत्" इति । तदत्रास्मदुक्तप्रकारेण संवदन्ति । व्यासे नन्दाग्नि ३९२० युते विभक्ते खबाणसूर्यैः १२५० परिधिस्तु सूक्ष्मः" इति प्रकाराद्वृत्तपरिधिः सूक्ष्मा १६०।३० स्थूलस्तु ७४ अङ्गुलानि । कर्णसूत्रद्वयम् २१ । २१ अङ्गुलानि । "सत्कृत्पोर्थीगणवृसिग्त्यनेन प्रकारेण जातम् त्रिलिख्या षण्णवत्यङ्गुलात्मता । परन्त्वतिस्थूलमानत्वाद्बहुषु स्थलेषु व्यभिचर-तीदमित्युपेक्षितम् । यतोऽर्धचन्द्रे ९८ अङ्गुलानि यवत्रयाधिकानि परिधिः त्र्यस्रे ९ अङ्गु-लानि ३ यवाः २ यूकाः । वृत्ते ८६ अङ्गुलानि । किञ्चिदधिकानि । षडस्रे ८८ अङ्गुलानि ४ यवाः ७ यूकाः । अष्टास्रे ८७ अङ्गुलानि ४ यवाः । एवं कुत्रापि न मिलतीति यत्किञ्चिदेतत् । कश्चिच्छारदापद्यमिदमन्यथा व्याख्यत् । पञ्चमांशेन प्राचीसूत्रं वर्धयेत् । ततः कोणयोः प्रतीची तिर्यक्सूत्रोत्पन्नैर्नैर्ऋत्यवायव्ययोरर्धार्धप्रमाणेन एकत्र कोणे पञ्चमांशस्यार्धमपरत्र कोणेऽपि पञ्चमांशस्यार्धं वर्धयेत् । कोणमानेन वर्धितवायव्यकोणात्प्राचीसूत्रपश्चिमभागावधि-भ्रमयेत् । तद्वर्धितनैर्ऋत्यकोणात् प्राचीसूत्रपश्चिमावधि भ्रमयेत् । वर्धिताभ्यां वायव्यनै

(१) अत्र "तेनपञ्चयवाधिकं तेन"
इत्येतत्प्राक्तनः पाठः क्वचित्पुस्तकेऽस्ति ॥

अर्द्धचन्द्रनिभं कुण्डं रमणीयमिदं भवेत् ॥

---

र्न्तकोणाभ्यां वर्द्धितप्राचीसूत्राग्रावधि सूत्रद्वयं दद्यादिति । तदसाम्प्रदायिकत्वादेतदर्थप्रतिपादकशब्दाभावात् सिद्धान्तशेखरादिमतादिविरोधात् स्वकपोलकल्पितम् । सूक्ष्मगणनायां क्षेत्रफलस्यान्याधिक्याद्यत्किञ्चिदेतत् । यदतिगणितज्ञाभिमानिन आगमज्ञाभिमानिनश्च लक्षणम्—"अष्टोनविंशतांशसूत्रकचतुष्कोणे पुरस्ताद्ददत्वष्टत्रिंशतमेधयत्त्वथ लवान् कोण्योरिमानर्धशः । मध्यात् सूत्रयुगे त्रिकोणमिति तच्छ्रेण्योस्ततोऽर्द्धभ्रमात् वृत्तार्द्धे बहिरालिखेदिति भवेत् कुण्डोत्तरे योजितम्" इति । चतुरस्रकोण्योरपि पश्चिमतिर्यक्सूत्रमुभयतस्ताष्टत्रिंशदंशान् अर्द्धार्द्धतया वर्द्धयेत् । एकोनविंशतिर्दक्षिणतः एकोनविंशतिरुत्तरत इति यत्तत् स्वकपोलकल्पितं क्रियासारक्रमदीपिकासिद्धान्तशेखरादिविरोधात् । क्षेत्रफलमध्ये च किञ्चिदधिकं क्षेत्रफलमिति ज्ञात्वा महद्भिः सन्तोष्टव्यमत्र । भ्रामयेदिति । लेखकदोषवशादपपाठः । भित्वाद् भितां हस्व इति ह्रस्वत्वात् । भ्रमयेत् इत्येव पाठः । चतुरस्रप्रकृतितया अर्द्धचन्द्रकुण्डमाह—*चतुरस्रीकृतमिति* । क्षेत्र शब्देन पूर्वापरमध्यसूत्रं गृह्यते तद्दशधा विभजेत् । तत् एकं भागमथ उत्तरतः एकमूर्ध्वतो दक्षिणतश्च त्यक्त्वा अग्रे अग्रचिह्ने उत्तरभागे व्याससूत्रं स्वेच्छाप्रमाणं पातयेदिति *मन्त्रविदित्यनेन* सूचितम् । *तत्तन्मानान्* मध्ये व्यासमानादुत्क्रम नयेत्* । तत्र प्रकारः । व्याससूत्रमध्यसूत्रसन्निपाते सूत्राद्रिं संस्थाप्य ऊर्ध्वभागे यच्चिह्नं कृतं ततो व्याससूत्रान्तं भ्रमयेत् । तदर्द्धचन्द्रनिभमुत्तराभिमुखं कुण्डं भवेत् । *तदुक्तं सिद्धान्तशेखरे* । "अर्द्धचन्द्रमथोच्यते । याम्ये तस्मारणे शस्तमुत्तराभिमुखं सदा" इति ॥ अत्र क्षेत्रोपपत्तिः । तत उभयतो व्यासत्यागेन सर्वस्य पञ्चमांशत्यागो भवति ॥ स च ४ अङ्गुलानि ६ यवा ३ यूकाः २ लिक्षा ३ वालाग्राणि ६ रेणवः ३ त्रसरेणवः १ परमाणुः । तदायं शिष्टो व्यासः । १९ । अङ्गुलानि १ यवाः ।४ यूका ६ लिक्षाः ३ वालाग्राणि १ रेणुः ४ त्रसरेणवः ७ परमाणवः । क्षेत्रफलानयनार्थं स वर्णितः ९६६ एतद्व्यासेन फलानयने यवाद्यधिकमङ्गुलत्रयमधिके क्षेत्रफलं भवति तदाचार्यणोपेक्षितमल्पत्वात् ॥ क्षेत्रफलाव्यभिचारी सर्वानुगतप्रकारस्तूच्यते—"चतुर्विंशतिधा भक्ते सूत्रे व्यासोऽर्द्धचन्द्रके । त्रिभागत्रयमेकस्य भागा एकोनविंशतिः ॥ एतन्मानार्द्धभ्रमेण दस्त्रेन्द्वयं गुणाङ्गुलात् ॥" तथा अयं व्यासः । एकोनविंशत्य (१९) ङ्गुलानि (१) एकोयवः । एका(१)यूका । चतस्रो(४) लिक्षाः । पञ्च (५)वालाग्राणि । त्रयो (३) रेणवः । एकः(१)त्रसरेणुः । चत्वारः (४) परमाणवः । तदा द्वे(२) अङ्गुले त्रयो (३) यवाः (३) तिस्रो यूकाः । एका(१) लिक्षा । पञ्च (५) वालाग्राणि । द्वौ (२) रेणू । त्रयः (३) त्रसरेणवः । द्वौ (२) परमाणू । इत्यमेवमूर्ध्वतस्त्यजेत् ॥ एवादशमेवोत्तरतस्त्यजेत् ॥ तत्र क्षेत्रफलानयनाय व्यासस्य व्यासः १९ । तेन एकोनविंशत्यङ्गुलानि । एकाङ्गुलस्य विंशतिधा भक्तस्य त्रयोभागाः सवर्णितो यथा $\frac{३८३}{२०}$ अत्र वृत्तफलानयनार्थमयं द्विगुणीकृतस्तत्र छेदस्यैवार्द्धकरणेन अपवर्तितो द्विगुणीभवत्येव तेनायं ( ३८ ३।१० ) सम्पूर्णवृत्तव्यासः । ततो "व्यासस्य वर्गो भनवाग्निघ्नः" इत्यादिना आनीतं क्षेत्रफलं सर्ववृत्तस्य ११५२ एतदर्द्धीकृतमर्द्धचन्द्रस्य क्षेत्रफलं ५७६ सूक्ष्मं ज्ञेयम् । अथवा द्विहस्तकुण्डे एतद्व्यासवर्गं द्विगुणीकृत्य तन्मूलमानेयं तत्र एव व्यासः । एव मन्येऽप्यूह्यम् । यत्कस्यचिदतिगणितज्ञाभिमानिनो लक्षणम् "चतुरस्रीकृते क्षेत्रे चतुर्विंशतिधा भजेत् । एकोनविंशत्या विशद्द्वादशांशाढ्यया लवैः ॥ (१)प्राच्यन्ताद्विभजेदूर्ध्वफलं प्रत्यक्चतुष्टिरति । तदवध्येधयेत्प्राच्यां तिर्यक् सूत्रं ततो भवेत् ॥ कुण्डमर्द्धेन्दुसदृशं सम्यग् दक्षिणतोद्धृतम्" इति । तथापि सूक्ष्मगणनया अङ्गुलत्रयं न्यूनम् ॥ यतस्तेन व्यासार्द्धत्रयवर्गोऽव

---

(१) प्राच्यन्तद्भ्रमयन्सूत्रपलम् इति पाठः क्वचित् ।

चतुर्थ्यां भेदिते क्षेत्रे न्यसेदुभयपार्श्वयोः ॥ ५७ ॥

क्षेत्रफलं दशगुणान्मूलमिति श्रीधराचार्योक्तेन प्रकारेण क्षेत्रफलमानीतं तच्च स्थूलम् । यतो गणितग्रन्थानामियं शैली यत्र स्थूलं सूक्ष्ममपि फलानयनमुच्यते ॥ तत्र भगवताश्रीधराचार्येण बृहत्पाट्यां प्रकारद्वयमप्युक्त्वा तत् संग्रहे त्रिशतीग्रन्थे स्थूला एव प्रकारा दर्शिताः । भास्कराचार्येण तु लीलावत्यां स्थूला इव सूक्ष्मा अपि प्रकारा उक्ताः । तां बृहत्पाटीं चावलोक्य मया सूक्ष्मं फलमिदमानीतम् । तदेव सूक्ष्ममिति मन्यते चेत्तदा मूले अत्यन्तं फलाधिक्यं स्यात् ॥ मन्यत्र ॥ अस्योत्तराभिमुखत्वात् । प्राच्यन्तात्सूत्रं वर्धयेत् प्रत्यक् चतुरश्रेति त्यन्तमेवासंगतं स्वग्रन्थे स्वयं योनिलक्षणं तदग्राह स्म "भववशिखिहृतान्तदिक्स्थकुण्डेऽग्रिचमधिमेखलमेव मध्यभागे । पश्चदिशि शशिदिङ्मुखा निवेश्य" इति । तेन स्वग्रन्थेषु विरोधो नोपलक्षित इति यत्किंचिदेतत् ॥ *यत्तु शुल्वे कात्यायनवचने* "मण्डलं चतुरश्रं चिकीर्षन् विष्कम्भं पञ्चदशभागान् कृत्वा द्वावुद्धरेच्छेषः करणी"ति । तदपि स्थूलत्वाभिप्रायं न तु सूक्ष्मगणनाभिप्रायम् । एवमपि चेत्कस्यचिन्महापुरुषस्य मनसि सन्देह उत्पद्यते तेन प्रत्यक्षं परीक्षा कार्या । धातुकाष्ठमृन्मयं वा एकहस्तमितं समचतुरश्रं पात्रं कारयित्वा मदुक्तमानेन शुल्वमानेन च एकं हस्तमितं वृत्तं पात्रं कारयित्वा चतुरश्रपात्रं सम्यक् जलेनापूर्य तज्जलेनैव वृत्तं पात्रं पूरयेत् । यदेववृत्तं पात्रं सम्यक् पूर्णतामेति तदेव शुद्धमिति मन्तव्यम् । तस्यैव लक्षणान्तरे "चतुष्कोणक्षेत्रे जिनलवकमध्यस्थितगुणे निधायाधः सार्धद्वयमुपरि सावलमतिमाद् । कलांशेनांशस्योनितमुपरि तिर्यक्‌त्रिगुणं भ्रमाद्वं तन्मापादपि शशिदलं कुण्डमिलितिन्त्व"ति । अत्र एकोनविंशत्यङ्गुलानि सार्धयवानि व्यासः । तत्र सूक्ष्मगणनायां पञ्चाङ्गुलानि न्यूनानि तत्कृतस्थूलगणनप्रकारेणाऽपि सार्धमङ्गुलं न्यूनं भवति । *यत्तु तेनोक्तं* "मण्डलं चतुरश्रमिति" *कात्यायनवचनेन संवादमिति* । तदप्यसिद्धं संवादाभावात् । *सिद्धान्तशेखरे तु* "लब्धा भाजिते क्षेत्रे चतुरश्रे समे तदा । दक्षिणोत्तरे चांशमेकैकं तु परित्यजेत् ॥ सर्वांशमध्यसूत्रेण भ्रमणाद्वृत्तमुत्तमम्" इति । *क्रियाकेऽपि* "चतुरश्रे मध्येऽर्के स्वरभागस्त्यागौ सदेशकौ । मध्येत्तद्भ्रमणेन कुण्डं कुण्डेन्दुवद्भ्रमात्" । इति ॥ अत्रोभयत्र अष्टादशाङ्गुलानि एकस्य द्वौ तृतीयांशौ व्यासः । अतोऽत्यन्तं न्यूनं क्षेत्रफलम् ॥ चतुरश्रमकुलितया त्र्यस्रिकुण्डमाह *चतुर्थेति* । क्षेत्रचतुरश्रमध्यसूत्रे चतुर्थां भेदिते उभयपार्श्वयोस्तिर्यक् प्रतीचीसूत्रपार्श्वयोरेकैकमंशं वर्धयेत् । तन्मानात् चतुर्थांशमानेन अग्रतो लाञ्छयेत् । ततः सूत्रत्रयं दद्यात् *तत्प्रकारः*" तिर्यक् प्रतीची सूत्रपार्श्वयोर्लाञ्छने तद्वाप्रि प्रतीचीसूत्रं वर्धयेदित्येकम् । वर्धितनैर्ऋत्यकोणान्मध्यसूत्राग्रलाञ्छने यावत् सूत्रं पातयेदिति द्वितीयम् । ततो वर्धितवायुकोणात् मध्यसूत्राग्रलाञ्छने यावत् सूत्रं पातयेत् इति तृतीयम् । एवमुक्तरीत्या पूर्वाभिमुखं त्र्यस्रिकुण्डं भवति । *तदुक्तं सिद्धान्तशेखरे* "त्रिकोणकुण्डमुच्यते । "नैर्ऋत्ये दर्शितं कुण्डं विप्रेन्द्रे पूर्वलक्षणमि"ति । अत्र क्षेत्रोपपत्तिः भुः २६ लम्बः ३० ततो "लम्बगुणं भूम्यर्धमि"त्यादिना जातं क्षेत्रफलम् ६४० षट्त्रिंशदङ्गुलानि न्यूनानि सर्वं च त्र्यस्रं यतः षट्त्रिंशन्मूः । *युक्तौ तु* "लम्बस्योर्गमपदं कर्ण"इति प्रकारेणानीतौ पञ्चत्रिंशद्दशाङ्कौ, त्र्यस्रिकुण्डे तु भुजत्रयं साम्यं चापेक्षितं तदुर्थं तच्च अन्यथा व्याख्यते चतुर्थां क्षेत्रे भेदिते एकैकमंशं पार्श्वयोर्वर्धयेत्तन्मानेन वर्धितान्तरं यत षट्त्रिंशन्मानं तेन मानेनाग्रतो लाञ्छयेत् । तत्र लाञ्छनप्रकारः वर्धितपार्श्वयोः षट्त्रिंशदङ्गुलमितसूत्रस्यादिं निधाय प्राचीमुखाग्रे लाञ्छयेदिति । ततः पूर्ववत् सूत्रत्रयं दद्यात् इति । एवं च सति भुजत्रयसाम्यं भवति । तत्परार्धं मिलित्वा यवचतुष्टयप्रक्षेपात् हस्तक्षेत्रफलसाम्यं च भवतीति *युक्त्*इत्यनेन सूचितमिति ते वदन्ति ॥ *मया तु* समभिभुजता न्यूनानतिरिक्तक्षेत्रफलता च यथा भवति तथा सर्वाङ्गुलकुण्डप्रकार उच्यते । "चतुर्विंशतिधा भक्ते सूत्रे चोभयपार्श्वयोः । द्वादशांशात्प्रवेकस्य भागान्वेदोनविंशतिम् ॥ अर्धेशो वर्धयेत्तस्मि गते-

अष्टादशांशे क्षेत्रे च न्यसेदेकं बहिर्बुधः ॥

---

इनार्थं प्रमाणमस्तु इति चेत् ? तदा शारदातिलककारादिमतपञ्चरात्रकामिकक्रियासारसिद्धान्तशेखराऽऽम्नायरहस्यमहाकपिलपञ्चरात्रादिष्वन्येष्वपि बहुषु ग्रन्थेषु मुनिप्रणीतेष्वपि विरोधो दृश्यते । अत्र किं ग्राह्यमिति संशय एव स्यात् । न च वाच्यं कल्पसूत्राणां साक्षादुपलभ्यमानश्रुतिमूलानामनुमितश्रुतिमूलाभ्यः स्मृतिभ्योऽधिकं प्रामाण्यं नानाशाखागतलिङ्गादिकल्पितश्रुत्यर्थोपसंहारोपनिबद्धस्य कल्पस्वरूपत्वात् । प्रयोगशास्त्रमिति चेदित्यस्मिन्नधिकरणे भाष्यकृता कल्पप्रामाण्यस्य व्यवस्थापितत्वादिति वार्त्तिककारेणाप्यधिकरणरचनायाः कृतत्वात् । तथाहि । इह कल्पानां प्रामाण्याप्रामाण्यचिन्ता न क्रियते । किन्तर्हि कल्पसूत्राण्युदाहृत्येदं चिन्त्यते किं तेषां स्वतन्त्राणामेव वेदवत्प्रामाण्यमुत स्मृतिवत् श्रुतिपरतन्त्राणामिति ? तत्र श्रुतिपारतन्त्र्येण स्मृतिवदेव प्रामाण्यं स्थापितम् ॥ किं च विरोधाधिकरणे "औदुम्बरीं स्पृष्ट्वोद्गायेदि"ति प्रत्यक्षश्रुतिविरोधात् "औदुम्बरी सर्वा वेष्टयितव्येति" कल्पकृद्वचनं लोभमूलमिति भाष्यकारैः सिद्धान्तितम् । अतः सर्वासां स्मृतीनां विरुद्धत्वात् । "श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ" । इति वचनस्यात्रानवकाशात् । अष्टदोषदुष्टत्वात् च विकल्पाभावात् संदेह एव स्थितः । तथा च तत्र विहितस्य कर्मणोऽननुष्ठानमेव स्यात् । तस्माद्यत्र समत्रिभुजता तुल्यक्षेत्रफलत्वं च भवति । तदेव त्रिकोणकुण्डमिति सिद्धान्तः सर्वेषु लक्षणवचनेषु । कानिचित् क्षेत्रफलव्यभिचारीणि कानिचित्समभुजताव्यभिचारीणीति । अतस्तानि त्र्यस्राकारतामात्रसंपादनफलानीति ज्ञेयम् । *सिद्धान्तशेखरेऽपि* "चतुरस्रीकृते क्षेत्रे क्षेत्रमष्टांशकं बहिः । विन्यसेद्धर्मसूत्राग्रे प्रतीचीसूत्रपार्श्वयोः ॥ सूत्राणां त्रितयं न्यस्येत्त्रिकोणं कुण्डमीरितम्"इति । अत्र च सप्तत्यधिकशताङ्गुलानि न्यूनानि विषमभुजता च । "तस्यैव षष्ठमंशन्तु पार्श्वयोः प्रविकाशयेत् । प्रत्येकं पश्चिमं सूत्रं तन्मानेनाथ सूत्रयोः ॥ विन्यासाद्ब्रह्मसूत्रान्तात्तदग्रावधिलम्बनात्" इति । *कादिमते*षट्त्रिंशदङ्गुलानि समभुजतास्ति । षण्णवतिपरिधिरेखाभिप्रायं चेदं लक्षणम् । "त्रिभागवृद्धितो मत्स्यैस्त्रिभिर्नैर्ऋताचरं भवेदि"ति । *कामिकेऽपि* तत्र चतुर्वर्गचिन्तामणिकारैः स्थानत्रये भागत्रयवृद्धिरिति व्याख्यातम् । तन्मते चतुः षष्ट्यङ्गुलान्यधिकानि । अन्यैस्तु अग्रेत्र्यंशवृद्धिरुभयपार्श्वेऽर्द्धार्द्धतया एकांशवृद्धिरिति व्याख्यातम् तन्मते चतुः षष्ट्यङ्गुलानि न्यूनानि । उभयमतेऽपि विषमभुजतैवेत्यलम् ॥६३॥६४॥६५॥६६॥६७॥६८॥

चतुरस्रप्रकृतितया वृत्तं कुण्डमाह *अष्टादशेति* । *क्षेत्रे* पूर्ववच्चतुरस्रस्य मध्यसूत्रे *अष्टादशांशे* अष्टादशधा विभक्ते *एकमंशं बहिः* कस्मिन्नपि सूत्रे न्यसेत् वर्द्धयेत् । *तेन मानेन* । मध्यात्तन्मानेन वर्द्धितमानेन *भ्रमये* तदा *वृत्तं* पूर्वाभिमुखं *कुण्डं* । न विद्यते उत्तमं यस्मादित्यनुत्तमम्* । अत्र क्षेत्रोपपत्तिः । तत्राष्टादशांशः १ अङ्गुलं २ यवौ ५ यूकाः । तत्र वृत्ते कृते व्यासे एतद्द्विगुणे २ अङ्गुले ५ यवाः २ यूके । एतावद्वर्द्धते तत्र २६ अङ्गुलानि । एकाङ्गुलस्य द्वौ तृतीयांशौ । अयं व्यासः २६ २/३ सवर्णितः ८०/३ अथवा ग्रन्थकृदुक्तप्रकारेणैव व्यासः । तत्र द्वौ अष्टादशांशौ तेन एको नवमांशः सवर्णितः २४।२४१॥८०।३॥ अथ समच्छेदार्थं न्यासः ८०/३ समच्छेदौ २१६/९। २४/९। योगः २४०/९। त्रिभिरपवर्तितः। स एवाङ्कः । ततो "व्यासस्य वर्गे भनवाग्निनिघ्ने" २४/१।२४/९ सूक्ष्मस्फले यश्च सहस्रभक्त"इत्यादिप्रकारेण लब्धक्षेत्रफले पञ्चशतीअष्टाधिकानि पञ्चाशदङ्गुलानि तेनाष्टादशाङ्गुलं क्षेत्रं न्यूनं भवति । तेन क्षेत्रफलाव्यभिचारी सर्वानुगतप्रकारस्तूच्यते "वृत्तकुण्डे मध्यसूत्रं चतुर्विंशतिधा भजेत् । एकांशपञ्चविंशांशसहितं सार्द्धमंशकम् ॥ बहिर्न्यस्य भ्रमान्मध्याद्वृत्तं कुण्डमितीरितम् ।" अत्र सार्द्धांशमेकमङ्गुलं चत्वारो यवाः एकस्य पञ्चविंशोऽशः २ यूके ४ लिक्षा अर्द्धसहिताः । वृत्ते

भ्रमयेत्तेनमानेन वृत्तं कुण्डमनुत्तमम् ॥ ५९ ॥
अष्टधाविभजेत्क्षेत्रं मध्यसूत्रस्यपार्श्वयोः ॥

---

कृते एतत् द्विगुणं ३ अङ्गुलानि १२ यवाः ६ यूकाः १ लिक्षा तेन सर्वस्य व्यासस्य व्यासः २७२/२५ अयं सवर्णितः ६७७/२५ "व्यासस्य वर्गे भनवाग्निनी"त्यादिना लब्धं क्षेत्रफलं ५७६ इदं सूक्ष्मगणनया। क्षेत्रफलं तु *शुल्वे कात्यायनः* "चतुरस्रं मण्डलं चिकीर्षन् मध्यादंशे निपात्य पार्श्वतः परिलिख्य यदतिरिक्तं भवति तस्य तृतीयेन सह मण्डलं परिलिखेत्स समाधिरि"ति । अ-ग्रांशशब्देन कोणः तत्कर्णसूत्रार्द्धम् १७ अङ्गुलानि यूकाद्वयोनानि । तच्च मध्यसूत्रार्द्धात् पञ्चा-ङ्गुलानि यूकाद्वयन्यूनानि। अधिकं तस्य तृतीयोंऽशोऽङ्गुलमेकमेकाङ्गुलस्य द्वौ तृतीयांशौ तेन १३ अङ्गुलानि । एकस्य द्वौ तृतीयांशौ व्यासार्द्धं अयं द्विगुणितो व्यासः २६ ३८/३६ २७।३। सव-र्णितो यथा ८२/२ अस्य क्षेत्रफले दशाङ्गुलानि वर्द्धन्ते ॥ यत्तु गणितज्ञाभिमानिनो लक्षणं "षो-डशधाकृतमध्यमसूत्रक्षेत्रपुरः परिवर्द्धितभागे । एककएव ततोऽन्तरांचलात् मण्डलकुण्डमिह भ्रमणात्स्यादि"ति । अत्र सप्तविंशत्यङ्गुलानि व्यासः । तस्य क्षेत्रफलं ५७२ अङ्गुलानि । अत्र चत्वार्यङ्गुलानि न्यूनानि भवन्ति इति न तदपि सम्यक् । *कामिके तु* "कर्णार्द्धाष्टांश-संन्यासाद्वृत्तं कुण्डमिहोदितमि"ति । पुरस्तात् सम्यक् न्यासः संन्यासः । अत्र साष्टमां-शचतुर्दशाङ्गुलानि व्यासोऽर्द्धमिति महान् व्यभिचारः । *ग्रन्थान्तरे तु* "चतुरस्रं पुराकृत्वा कुण्डक्षेत्रप्रमाणतः । नवभागं पुराकृत्वा चैकंभागं बहिर्न्यसेत ॥ तस्मान्मध्यं गृहीत्वैवं भ्रमात्त (तद्भ्रमा)द्वर्तुलं भवेदि"ति । अत्रैकस्य तृतीयांशसहितानि एकोनत्रिंशदङ्गुलानि व्यासः। तेन महत्तरमन्तरम् । केचन एकं भागं बहिर्न्यसे "दर्द्धार्द्धतये"तिशेषः । तदा मूलपद्येन सहैकवा-क्यता भवति इति वदन्ति । *सिद्धान्तशेखरे* तु "चतुरस्रे सुसंसिद्धे तद्बाह्ये भागमष्टमम् । क्षेत्रस्य विन्यसेद्दिक्षु मध्यात्तन्मानसूत्रतः ॥ भ्रमणभ्रामणेनैवं वृत्तं कुण्डमुदाहृतम्" इति । अत्र त्रिंशदङ्गुलानि व्यासस्तेन महत्तममन्तरम् । अतः सिद्धान्तशेखरवचनं कैश्चिदन्यथा व्याख्यायते । क्षेत्रस्याष्टमं भागं बाह्ये दिक्षु विन्यसे "दर्द्धार्द्धतये"ति शेषः । तेन उभयपार्श्व-मिलित्वा अष्टमो भागो भवति । तदा व्यासः २७ क्षेत्रफलं चतुरङ्गुलन्यूनं सूक्ष्मगणनयेति ज्ञातव्यम् । स्थूलगणनायामङ्गीक्रियमाणायां लिखितकात्यायनवचने महदन्तरम् स्या-दित्यलम् ॥ ५९ ॥

चतुरस्रप्रकृतितयाषडस्रंकुण्डमाह *अष्टधेति* । *क्षेत्रं* चतुरस्रमध्यसूत्रमष्टधा *विभजेत्* *मध्यसूत्रस्ये*त्यत्र मध्यसूत्रपदेन दक्षिणोदग्गतसूत्रं गृह्यते पार्श्वयोरिति वचनात् । अन्यथा अधऊर्ध्वमित्येव ब्रूयात्तस्य *पार्श्वयोर्द*क्षिणोत्तराग्रयो*रेकमेकं भागं न्यसेद्व*र्द्धयेत् । ततः *अनेन मानेन* वर्द्धितमानेन वर्द्धितमानचिह्नेन *मध्यतो* मध्याच्च *पार्श्वयुगे* वर्द्धित दक्षिणोदग्गतसूत्रमध्यस्य दक्षिणपार्श्वे वामपार्श्वे च पूर्वापरभागयो *र्मत्स्यचतुष्कं कुर्यात्* । *तन्मधिसम* इति । अनेन सम्प्रदायेनैवायमर्थो ज्ञेय इत्युक्तम् । तत्र मत्स्योत्पादनप्रकारः । क्षेत्रमध्यादुत्तरकृतचिह्नपरिमिततत्सूत्रस्यादिं क्षेत्रमध्ये निधाय पूर्वैशानयोरन्तराले सूत्रार्द्धं कृत्वा ततउत्तरकृतचिह्ने तत्सूत्रादिं निधाय तदर्द्धंवृत्तभेदिवृत्तार्द्धं कुर्यादेवं पूर्वैशानयोर्दिशो-रन्तराले मत्स्यसिद्धिः । एवमेव क्षेत्रमध्याद्दक्षिणकृतचिह्नाच्चार्द्धपूर्वाग्नेयदिशोरन्तराले च मत्स्यद्वयं कुर्यात् । एवमेव प्रकारेण पश्चिमवायव्ययोरन्तराले पश्चिमनैरृत्ययोरन्तराले च म-त्स्यद्वयं कुर्यात् । तत उत्तरचिह्नात् पूर्वैशानान्तरालमत्स्यं यावदेकं सूत्रं पश्चिमवायव्यान्तरा-लमत्स्यं यावत् द्वितीयं सूत्रं दद्यात् । ततो दक्षिणचिह्नात् पूर्वाग्नेयान्तरालमत्स्यं यावत् एकं

भागंन्यसेदेकमेकं भागेनानेन मध्यतः ॥ ६० ॥

---

सूत्रं पश्चिमयोर्मत्स्यान्तरालमत्स्यं यावत् द्वितीयंसूत्रं दद्यात् । एवं सूत्रचतुष्टयदानम् । ततः पूर्वमत्स्ययोर्मिथ एकं तद्वत्पश्चिममत्स्ययोर्मिथ एकं सूत्रं दद्यात् । एवं षट्सूत्रसंपातेन पूर्वोक्तषडस्रं कुण्डंभवति । तदुक्तं *क्रियासारे* क्षेत्रं वस्वंशकं कृत्वा बहिः पार्श्वद्वयेंऽशकौ । न्यस्यास्तेन प्रमाणेन मत्स्याचतुष्टयं यथान्यसेत ॥ कोणान्यन्यानि चत्वारि पार्श्वयोश्च पूर्वं क्रमात् । षट्सूत्राणि न्यसेत्तेषु तत्र स्यात् षट्कोणकुण्डकम्" इति । *सिद्धान्तशेखरेऽपि* । "चतुरस्रसमे सिद्धे क्षेत्रमष्टांशतो बहिः । अग्रयोर्गर्भसूत्रस्य योजयेत्तत् प्रदेशतः ॥ गर्भमध्यप्रमाणेन सूत्रेण भ्रमयन्क्रमात् । गर्भमध्ये बहिर्भागे विन्यस्य क्रमशस्त्यजेत् ॥ उत्तरे दक्षिणे चापे मत्स्ययोर्द्वितयं ततः । मीने नागांशके मीनेमीनयुग्मे ततः क्रमात ॥ सूत्रषट्कं न्यसेत्तत्तु कुण्डं षट्कोणमीरितम्" इति ॥ अत्र गर्भसूत्रस्येति दक्षिणोदग्गतसूत्रस्य उत्तरे दक्षिण इति वर्त्तितदक्षिणोदग्गतसूत्रमध्यस्य उत्तरपार्श्वे दक्षिणपार्श्वे इत्यर्थः । अत्र क्षेत्रोपपत्तिः । विषमचतुरस्रद्वयं कल्पयेत । तत्र एकस्य भूः ३० अङ्गुलानि मुखं १६ लम्बः १३ ततो "लम्बेन निघ्नकुमुखैक्यखण्डम्" इत्यनेन प्रकारेण लब्धं क्षेत्रफलं २९२ यवचतुष्टयाधिकम् । एवं द्वितीयचतुरस्रस्यापि २९२ यवचतुष्टयाधिकम् । एकत्र मिलितम् । ५८६ एवं नवाङ्गुलान्यधिकानि भवन्ति । षड्भुजसमता भवत्येव । अत्र "स्वाबाधाभुजकृत्योरन्तरमूलं प्रजायते लम्ब" इत्यनेन लम्बसाधनं ज्ञेयम् । यद्वा क्षेत्रत्रयं कल्पयेत् । मध्ये आयतचतुरस्रम् । पार्श्वयोस्त्र्यस्रद्वयम् । तत्रायतः चतुरस्रस्यफलं ३९० एकस्य चतुरस्रस्यफलं ९७ यवचतुष्टयाधिकम् । एवं द्वितीयस्यापि मिलित्वा क्षेत्रफलं ५८६ एवं विषमचतुरस्रचतुष्टयं परिकल्प्य १४६ यवद्वयम् । एवमेतावदेकैकस्य फलमानीय सन्तोष्टव्यम् ॥ यद्वा त्र्यस्रषट्कं परिकल्प्य एकैकस्य ९७ यवचतुष्टयाधिकं फलमानीय संवाद्यम् । एवमन्यप्रकारेणापि फलसंवाद ऊहनीयः ॥ *अन्येत्वन्यथा वर्णयन्ति* । क्षेत्रं चतुरस्रमध्यसूत्रमष्टधा विभजेत् । मध्यसूत्रस्य प्राचीसूत्रस्य पार्श्वयोरधऊर्ध्वं च एकं भागंन्यसेत् । मध्यसूत्रस्य दक्षिणोदग्गतस्य च पार्श्वयोरधऊर्ध्वमेकं भागं न्यसेत् । ततो मध्यतोऽनेन मानेन पार्श्वयुगे मत्स्यचतुष्कं कुर्यात् । तत्र मत्स्यकरणप्रकारमाह- पूर्वापरायतसूत्रचिह्नद्वयस्य दक्षिणोत्तरतस्तेनमानेन मत्स्यद्वयं कुर्यात् । तत्र चतुरस्रपूर्वपरिधिरेखया दक्षिणोत्तरया प्राचीसूत्रस्य यत्रसम्पातस्ततउपर्यधश्च त्र्यङ्गुलेन तां परिधिरेखामङ्कयित्वा पूर्वतः कृतचिह्नदक्षिणभागे अर्द्धवृत्तं कृत्वा परिधिरेखागतदक्षिणचिह्नात् तद्द्वयच्छिभेदि अर्द्धवृत्तं कुर्यात् । एवं दक्षिणभागे मत्स्यसिद्धिः । एवमुत्तरभागेऽपि । एवमुक्तप्रकारेण चतुरस्रपश्चिमपरिधिरेखायामपि अङ्कद्वयं कृत्वा पश्चिमदिशि कृतचिह्नस्य दक्षिणोत्तरभागयोर्मत्स्यद्वयं कुर्यात् । ततो वर्द्धितदक्षिणचिह्नात पूर्वादिदक्षिणविभागमत्स्यं यावदेकं सूत्रं पश्चिमदिग्दक्षिणभागमत्स्यं यावत् द्वितीयंसूत्रम् । एवं वर्द्धितोत्तरचिह्नात् पूर्वदिगुत्तरभागमत्स्यं यावदेकं सूत्रं पश्चिमदिगुत्तरभागमत्स्यं यावत् द्वितीयं सूत्रम् एवं सूत्रचतुष्टयदानम् । ततः पूर्वमत्स्ययोर्मिथएकंसूत्रम् । पश्चिममत्स्ययोर्मिथ एकं सूत्रम् । एवं षट्सूत्रस्य सम्पातात् षडस्रं कुण्डमिति । अत्र विषमचतुरस्रद्वयं प्रकल्प्य एकस्य क्षेत्रफलं २७० एवं द्वितीयस्यापि मिलित्वा ५४० । तन्मते मध्यसूत्रस्य पार्श्वयो रित्यस्यावृत्तिर्भवति । किंच क्वचिन्मध्यसूत्रशब्देन प्राचीसूत्रं गृह्यते । क्वचिद्दक्षिणोदग्गतसूत्रं तदसम्बद्धं प्रमाणाभावात् । मध्यत इति पदं व्यर्थमेव स्यात् । मत्स्योत्पादनार्थं चतुरस्रपरिधिरेखयोर्यदङ्कनं तदपि स्वकपोलकल्पितम् । क्षेत्रफलमध्ये षट्त्रिंशदङ्गुलानि न्यूनानि विषमभुजता चेत्यज्ञानविजृम्भितम् । येतु अस्यैव व्याख्याने प्राचीसूत्रपूर्वापरभागयोः कोणपातमिच्छन्ति । ते नमस्या एव । अथ तत्र क्षेत्रफलसाम्यापादनाय बहवः प्रकाराः सम्भाव्यन्ते । *तत्र कश्चित्* "अष्टधा विभजेत् क्षेत्रं मध्यरेखाधरोपरि । भागं न्यसेदेकमेकं पार्श्वयोस्तु दिगङ्कुतः ॥ संवर्ध्य क्षेत्रेष्वष्टांशो तत्र क-

कुर्यात्पार्श्वयुगे (द्वये) मत्स्यमत्स्यचतुष्कं तन्त्रवित्तमः ॥
सूत्रषट्कं ततो दद्यात्षडस्रं कुण्डमुत्तमम् ॥ ६१ ॥

---

द्वयोर्द्वयोस्तिस्रो । क्षेत्राष्टमांशतः कुर्याद्दिक्षुत्रे तावदङ्गुलः ॥ तन्मेये क्षेत्रषडंशगुणेनैव भुवस्तिस्रो । षट्सूत्रीं पातयेत् तेषु षडस्रं कुण्डमुत्तमम्" इति । अत्र दक्षिणोदग्गतसूत्रमष्टाङ्गुली वर्धितं क्षेत्रफलमन्यूनातिरिक्तमेव । षड्भुजसाम्यं नास्ति । तथाच "अष्टोनविंशतांशकेन तद्युगे क्षेत्रस्य तिर्यक्स्थितान्तः सूत्रोभयतो भ२७वर्द्धनमथाङ्कोर्ध्वाधरे चिह्नयेत् । तत्त्वां २८ तेषु तद्भैः पुरोऽप्यपरतोऽङ्गुलद्वयस्य २१ पूर्वौ मत्स्यद्वयाद्द्विद्विगुणैर्द्विपार्श्वगुणतस्तयोः षडस्रीरितम्" इति । अत्रापि क्षेत्रफलमन्यूनानतिरिक्तमेव । षड्भुजसाम्यं च नास्ति । *अन्यत्र* इदं वायव्यकुण्डे तच्च पूर्वमुक्तम् । अत्र च पूर्वपश्चिमयोरेव कोणपातायोनिस्थापनावकाशात् "न कुर्यात् कुण्डकोणेषु योनिं तां तन्त्रवित्तम" इति । कोणे योनिस्थापनस्य निषेधात् । कुण्डस्य पूर्वापरता व्याहन्यते । एतल्लक्षणद्वयकर्ता च स्वग्रन्थे कुण्डान्युक्त्वोक्तम् । "प्रागादिकुण्डमध्यचतुरश्रं वारुण्यस्य योनीतरपञ्चकुण्डं । प्रागग्रिका पश्चिमयोनिरग्नेर्गले योनिलक्षणं वदता चोक्तम् "अथवा निखिलकुण्डान्तदिक्स्थकुण्डे ज्वियमपि मेखलमेव मध्यभागे । यमदिशि शशिदिङ्मुखी निवेश्या वरुणदिशीतरकुण्ड ऐन्द्रवक्त्रा" इति । तेन स्वग्रन्थेन पूर्वापरविरोधोऽपि नोपलक्षित इति यत्किंचिदेतत् । तथाच । प्राचीमध्यसूत्रमङ्गुलत्रयं वर्द्धयेत् । ततो वर्द्धितचिह्नाद् दक्षिणोत्तरतः चतुरङ्गुलमानेन चतुरस्रपूर्वपरिधिरेखाङ्काभ्यां मत्स्यद्वयं कुर्यात् । एवं पश्चिमदिश्यपि दक्षिणोदग्गतसूत्रमङ्गुलत्रयमङ्गुलस्य षष्ठांशसहितं वर्द्धयेत् । एतदपि क्षेत्रफलमन्यूनमेव । इतोऽपि बहवः प्रकाराः सम्भाव्यन्ते । क्षेत्रफलसाम्यापादनाय (नतु) षड्भुजसाम्यापादनाय । एवं कुण्डमनलुगतता प्रसज्येत । तेन षडस्रकुण्डे षण्णामपि भुजानां सम्यक् क्षेत्रफलसाम्यमवश्यमपेक्षितम् । यतोऽत्र क्रियासारे कादिमते कामिके सिद्धान्तशेखरेऽपि षड्भुजसमताया उक्तत्वात् । *तत्र सर्वानुगतप्रकारस्तूच्यते* "षडस्रे मध्यसूत्रं तु चतुर्विंशतिधा भजेत् । तद्वैकैकनवांशोनैस्त्र्यंशैः संवर्त्य मध्यतः ॥ भ्रमयेत् तेन तद्वृत्तं तद्व्यासार्द्धेन लाञ्छयेत् । षट्सु स्थानेषु षट्सूत्रपातनात्तत्षडस्रकम्" ॥ *अस्यार्थः* । त्र्यंशाः अङ्गुलत्रयं तत्कीदृक् ? एकैकस्य नवमोंऽशः तेनोनं तेनायं वृत्तव्यासः २१ अङ्गुलानि ६ यवाः २ यूके किंचिन्न्यूने । तस्य सवर्णनार्थं व्यासः २१। सवर्णितः २६८ व्यासस्यार्द्धं १३४ व्यासचतुर्थांशः ६७ इयमेवाबाधा । ततः "स्वाबाधाभुजकृत्योरन्तरमूलं प्रजायते लम्बः" इत्यनेनानीय लम्बम् । भुजैकखण्डलम्बेन गुणिते च्छेदेन भक्ते लब्धम् । एकविषमचतुरस्रस्य क्षेत्रफलम् २८८ एवं द्वितीयस्यापि मिलित्वा क्षेत्रफलम् ५७६ । अथवा मध्ये आयतचतुरस्रं पार्श्वयोस्त्र्यस्रद्वयं कल्पयेत् । तत्र व्यासचतुर्थांशः शरः । अयमेवोभयत्र्यंशस्य लम्बः । ततः "व्यासाच्छरोनाच्छरसंगुणाच्च मूलं द्विनिघ्नं भवतीह जीवे"ति । आनीता ज्या २६ किंचिदूना ततोमध्यायतचतुरस्रस्य "तथायते तद्भुजकोटिघातः" इत्यनेन पूर्ववच्च त्र्यस्रद्वयस्यापि फलमानीय सर्वमेकीकृतं क्षेत्रफलम् ५७६। एवं विषमचतुरस्रचतुष्टयं त्र्यस्रषट्कं वा कल्पयित्वा फलसंवाद ऊहनीयः । अत्र षण्णां भुजानामपि साम्यमस्ति । तत्तु "खखखाभ्ररसैरङ्कैः ६०००० वृत्तव्यासे समाहते । खखखाभ्रार्कैः १२०००० सम्भक्ते लभ्यन्ते क्रमशो भुजाः" इति भास्कराचार्योक्तपरिपाट्या भुजानयनेन सङ्गतम् । यत्तु *कादिमते* "तन्मध्यद्वादशांशेन विकाश्य ब्रह्मसूत्रकम्॥ तेन मानेन च तथा कृत्वा वृत्तमपि स्फुटम् ॥ तद्वृत्ते वृत्तमध्यस्य कुर्यादर्द्धेन चाङ्कनम् । तत्र षट्सूत्रपातेन भवेत्कुण्डं षडस्रकम्" इति । अत्र क्षेत्रफलमध्ये (द्विसप्तत्यङ्गुलमध्ये) द्विसप्तत्यङ्गुलानि न्यूनानि । भुजसाम्यमस्त्येव "षड्भागवृद्धितोमत्स्यैश्चतुर्भिः स्यात् षडस्रकम्" इति॥ *कामिकेतु* महाव्यभिचारः भुजसाम्यमस्त्येव षण्णवतिपरिधिरेखा-

चतुरस्रीकृतं क्षेत्रं विभज्याष्टादशांशतः ॥
एवं कृतं बहिर्न्यस्य प्राग्वत्तेन वर्तुलम् ॥ ६२ ॥

(१)मिप्रायेणेदं लक्षणम् ॥ यत्तु तत्तत्तन्मतस्यचतुष्टयानुसारेण चतुरस्रसन्धानिधपूर्वपश्चिमपरिधिरेखाणां लाञ्छनचतुष्टयं विदध्यात् इति चतुर्वर्गचिन्तामणिकारव्याख्यानम् । तत्तु क्षेत्रफलानुसारेण कश्चिल्लिखिति उपेक्षणीयं तादृशग्रन्थाभावात् ॥ भुजलाभ्याभावाच्च ॥ ६० ॥ ६१ ॥

चतुरस्रप्रकृतितया पद्मकुण्डमाह *चतुरस्रीकृतमिति* ॥ इदं वृत्तकुण्डे वृत्तानि क्रियेत चेत्तदा "यावान् कुण्डस्य विस्तारः खननं तावदीरितम्" इति वचनात् नज्ञायते कियद्दलं कुण्डं स्यात् इति नैतद्व्याख्यातं किं तर्हि *बहिरिति* । वीप्सा । "मध्यादि"ति शेषः । तेन वृत्ते कृते मध्याद्बहिर्बहिः कर्णिकादीनां त्रीणि वृत्तानि कुर्यादित्यर्थः । *तदुक्तं क्रियासारे* "कृत्वैवं पूर्ववद्वृत्तं तन्मध्ये वर्तुलत्रयम् । आस्यैवं पङ्कजाकारं कारयेत्कर्णिकादिभिः" इति । तदा यत्कृतं सर्वबाह्यवृत्तं तदेव दलाग्रवृत्तं स्यात् । तदा दलाग्रकरणे यत् क्षेत्रं त्यज्यते तेनात्यन्तं क्षेत्रस्य न्यूनता स्यात् । पूर्वं वृत्तकुण्डे अष्टादशाङ्गुलन्यूनता दर्शिता । अत्र ततोऽपि न्यूनता स्यात् । *तेनैवं कैश्चिद्व्याख्यायते* । इदं यन्थकृता यद्वृत्तमुक्तं तत्तु क्षेत्रसंग्रहमात्रं कृतम् क्षेत्रसीमावृत्तमित्यर्थः । वक्ष्यमाणपद्मकरणे "पद्मक्षेत्रस्य संत्यज्य द्वादशांशं बहिः सुधीः । तन्मध्ये विसृजेद्वृत्तैस्त्रिभिः समविभागतः" इत्युक्तत्वात् । अत्र व्यासद्वादशांश अङ्गुलद्वयं सपादं, तत्र वल्लीमावृत्तं तल्या एकाङ्गुलमेको यनस्तत्रवृत्तं कुर्यात् । तदुपर्यपि तेनैव मानेन वृत्तं कुर्यात् । तेन मध्ये सीमावृत्तं जातम् । तत्रान्तर्वृत्तस्य चतुर्विंशत्यङ्गुलानि यवत्रयं च व्यासः । तत्र समविभागतस्त्रीणि वृत्तानि कुर्यात्ततोवर्द्धितद्वादशांशेन दलाग्राणि कुर्यात् । तत्र बहिर्वृत्तस्याष्टाविंशत्यङ्गुलानि सयवाः(२) व्यासस्तत्रोभयवृत्तक्षेत्रफलमेकीकृत्यार्द्धमस्य क्षेत्रफलम् । अत्रापि व्यभिचारः यतोऽधोवृत्तस्य क्षेत्रफलं ४६६। यवाः ५।०।०। ऊर्ध्ववृत्तस्य (सर्वोपरिवृत्तस्य) क्षेत्रफलम् ६५९ एकीकृतम् ११२६ एतदर्धं ५६३ तेन त्रयोदशाङ्गुलानि न्यूनानि भवन्ति। *वस्तुतस्तु* एवक्षेत्रस्योत्पादको यः पद्मकरणप्रकारः स सर्वतोभद्रमण्डलादावेव ज्ञेयः । नवकुण्डकरणे तत्र क्षेत्रस्याधिक्यं स्यात् । यत्तु ग्रन्थकारेण "वृत्तानि कर्णिकादीनां बहिस्त्रीणि" इति । *क्रियासारेऽपि* "वर्तुलत्रयमि"ति। तत्तु यन्त्रोर्ध्वभूवृत्ताभिप्रायेणैवेति ध्येयम् ॥ यन्त्राग्रवृत्तमधिकं कुर्यात् इति सूचयितुं तेनापि क्षेत्रफलमधिकं किंचित् । तेन पद्मकुण्डकरणे पद्मवृत्तान्येवेति ज्ञेयम् । तेनाऽत्र तद्वद्दलाग्रकरणमपि नास्ति । *अत्र क्षेत्रफलाव्यभिचारी सर्वानुगतप्रकारस्तूच्यते* । "पद्मकुण्डे मध्यसूत्रं चतुर्विंशतिधा भजेत् । भ्रमयेत्कर्णिकावृत्तं त्र्यंशवृत्तार्द्धमानतः ॥ षडंशवृत्तार्द्धमानभ्रमितवृत्तेषु केसराः । नवांशवृत्तार्द्धमाने वृत्ते स्यादूयत्र मध्यभूः ॥ द्वादशांशात्तु वृत्तार्द्धवृत्ते यत्रोर्ध्वभूः स्मृता । दलाग्राणां तु वृत्तार्द्धं कृत्वा पञ्चदशांशकैः ॥ न्यूनैः पद्मसिरेकांशचतुः षष्ट्यंशकैर्भ्रमात् । रेखाग्रेभ्यो यत्र सीम्नो दलाग्राणि प्रकल्पयेत् ॥" अत्र मध्ये षडङ्गुलव्यासकर्णिका "यावान् कुण्डस्य विस्तारः खननं तावदीरितमि"ति वक्ष्यमाणत्वात् । तेन कर्णिकाखननमपि प्राप्तम् । तत्र कर्णिका किंचिदुच्चा रक्षणीया । तदुच्चता यद्यप्यत्र नोक्ता तथापि नाभिकथने "एकहस्तस्य नाभि" "नेत्ररेखाङ्गुलोपेतामि"ति वक्ष्यति । तेन सा चतुरङ्गुलव्यासाद्व्यङ्गुलोत्सेधा । तत्र यदि चतुरङ्गुलव्यासायाः द्व्यङ्गुल उत्सेध स्तदा षडङ्गुलव्यासायाः कियानुत्सेध इति त्रैराशिकेनोच्चता आनेया । तत्र त्रैराशिकसूत्रम् । "प्रमाणमिच्छा च समानजाती आद्यन्तयोस्तत्फलमन्यजाती । मध्ये तदिच्छाहतमाद्यहृत्स्यादिच्छाफलं व्यस्तवि-

(१) वृत्तस्यषण्णवत्यंशोदण्डवत्परिदृश्यते । इत्यभिप्रायेणेतिपाठान्तरम् ।

(२) सप्तयूकाः । इत्यपि पाठः

वृत्तानि कर्णिकादीनां बहिस्त्रीणि प्रकल्पयेत् ॥
पद्मकुण्डमिति प्रोक्तं विलोचनमनोहरम् ॥ ६३ ॥
पूर्वोक्तं विभजेत्क्षेत्रं चतुर्विंशतिभागतः ॥

भिर्विलोमैरित्यति ॥ तत्र त्रैराशिकस्य न्यासः ५।२।६। ततो अन्त्येन ६ गुणितम् १२ आदिना ५ भक्ते लब्धोन्नता *चतुर्थं कामिके* "उत्सेधं तु ततः कुर्यात्कर्णिकायं विभागतः" इति । अ-तोऽग्रन्थकृद्भी "योनिकुण्डे योनिमब्जकुण्डे नाभिं च वर्जयेदि"ति वक्ष्यति । *सिद्धान्तशेखरे-ऽपि* "योनौ योनिं न कुर्वीत पद्मे पद्मं न कारयेत्"। इति।*क्रियासारेऽपि* योन्यासम्बुजकु-ण्डयोः क्रमेण योनिं नाभिं च न कुर्वीत । चतुर्मुखेऽपि तस्मात् त्र्यङ्गुलं कर्णिकोन्नता संस्था-प्यान्यत् खननीयं केसरस्थानमपि खनित्वा अधोभागे केसराणि स्थापयेत् । दलाग्राकारतया दलमध्यः सर्वोऽपि खननीयः । तत्र चतुर्विंशाङ्गुलव्यासवृत्ताद्बहिर्यद्वृत्तन्तस्यार्धमेव यथा गृ-ह्यते तथा कुशलतया वाह्यहस्तेन दलाग्राणि रचयेत् । यतस्ततएव यन्त्राणां वक्रता सा च यत्र-सीमा रेखा यन्त्रोर्ध्वभूवृत्तसम्पातात् यत्रमध्ये रेखां यावदुभयतो रेखाया दानात् । इदं पद्मकु-ण्डम् । अत्र क्षेत्रोपपत्तिः । चतुर्विंशतिव्यासवृत्ते पूर्ववत् फलम् ४५२ अङ्गुलानि ३ यवाः ४ यूकाः बहिर्वृत्तस्य एकाङ्गुलस्य दशभिश्चतुष्षष्ट्यंशैरूनत्रिंशदङ्गुलव्यासस्य क्षेत्रफलं ६८८ (६९९) अ-ङ्गुलानि ४ यवा ४ यूकाः १४ मिलितं ११९२ एतदर्धं क्षेत्रफलम् ५७६ इदमतिसूक्ष्मफलम् । त-दुक्तं *कामिके* "चतुरस्राष्टभागेन कर्णिका स्याद्विभागशः । तद्बहिस्त्वेकभागेन केसराणि प्रकल्पयेत् ॥ तदीये दलमध्यानि चतुर्थे दलकोटयः । चतुरस्राद्बहिः कुर्याद्दलाग्राण्यपि यत्नतः" ॥ इति । अत्र क्षेत्रफलं चतुरङ्गुलमधिकम् । यत्तु अतिगणितशास्त्रिसानिनोलक्षणम् । "क्षेत्रेन्तश्चतु-रस्रके विततिवस्वंशेनवृत्तं कृतं व्यासार्द्धेन तु कर्णिका पुनरियद्वृध्या क्रमात्केसराः । तद्वृ-ध्या दलमध्यभूः पुनरियद्वृध्या क्रमेणोर्द्ध्वभूः क्षेत्रव्यासजिनांशकस्य विशिखैरूनं कलांशैः पुनः॥ तत्संवर्ध्य दलाग्रकाणि रचयेत् क्षेत्रार्द्धमुज्झन्विना स्या... त्रिशाल्लवविस्तृतीयमियता क्षिप्तेन वृत्ते बहिः ॥ स्वव्यासार्द्धमितोन्नतामिहखनेत्स्यस्काऽन्तराकर्णिकां कुर्वन् केसरचिह्नमष्टदलकं यद्वा चतुर्भिर्दलैः" इति ॥ अत्र क्षेत्रफले एकादशाङ्गुलानि न्यूनानि भवन्ति । तथा "आंशन्तु वृत्तव्यासस्य स्वाष्टांशेनाधिकं बहिः । संवर्ध्य मध्याद्विलिखेद्बाह्यवृत्तं द्वितीयकम् ॥ तृतीयं तावतैवान्यत् सीमावृत्तान्तरा लिखेत् । अष्टसूत्र्यां षोडशधा तत्क्षेत्रं विभजेत्ततः ॥ पत्रमध्य-स्थसूत्रान्ताद्यथा बाह्यकरस्तथा । तत्पार्श्वसूत्रान्तरस्थवृत्तं संपातत्तो लिखेत् ॥ वृत्तार्द्धे द्वे दलाग्रार्थमन्तर्वीथ्यां हि यावती । त्यक्त्वाभूः स्याद्बहिर्वीथ्यास्तावती गृह्यते यथा ॥ क्षेत्रत्र्यं-शेन मध्ये स्यात् कर्णिका स्वदलोन्नता । पत्राग्राणि तदाकारात् खनेदखिलमन्तरम् ॥ एवम-ष्टदलाब्जाभं जायते कुण्डमुत्तमम्" इति । अत्र महान् व्यभिचारः । *कामिके न* चतुर्दल-ताप्युक्ता । "अवशिष्टं दलं वेददलमष्टदलं तु वा" इति । *अन्यत्रापि* "दशांशे च विन्यस्य वार्द्धेशमेकं परिभ्राम्य तेनैव वृत्तं दलानाम् । बहिर्मध्यमे कर्णिकां वापि कुर्यान्नवेदष्टपत्रं बुधः पद्मकुण्डमि"ति । अत्राल्पमन्तरम् ।*सिद्धान्तशेखरे* "चतुरस्रेऽष्टधा भक्ते कुर्याद्वृत्तचतुष्-यम् । कर्णिकां(१)त्रापि केसरे वृत्ते तृतीये पत्रसञ्चयः ।। दलाग्राणि चतुर्थेस्यु वृत्तान्येवं प्रक-ल्पयेत् । कोष्ठे युग्मस्य मध्येऽपि भ्रमयन्त्रं निधाय वा । भ्रमणात्सन्धिमारभ्य पत्राग्रं बाह्यतो-भवेत् । चतुर्दिक्षु चतुः पत्रं पद्माभं कुण्डमीरितम् अथवाष्टदलं पत्रं कुर्याच्छास्त्रोक्तमा-र्गतः"इति । अत्र तु अत्यन्तं न्यूनं क्षेत्रफलम् ॥ ६२ ॥ ६३ ॥

चतुरस्रप्रकृतितया अष्टास्रकुण्डमाह *पूर्वोक्तमिति* ॥ पूर्वोक्तं क्षेत्रं पूर्वोक्तचतुरस्रमध्यसूत्रं *चतुर्विंशतिभागतो *विभजेत्* । *एकं भागं *चतुर्दिक्षु । बहिर्न्यस्य* षड्विंशत्यङ्गुलायाम-

(१) अत्र ग्रन्थस्त्रुटितः प्रतिभाति ।

एकं भागं बहिर्न्यस्य चतुरस्रं प्रकल्पयेत् ॥ ६४ ॥

विस्तारे चतुरस्रान्तरं बहिः कुर्यादित्यर्थः । अत्र कोणशब्देन कोणसूत्रम् अन्तस्थचतुरस्रस्य यत्कोणसूत्रं यूकाचतुष्टयोनचतुस्त्रिंशदङ्गुलानि तदर्धं यूकाद्वयोनसप्तदशाङ्गुलानि तदर्धं यूकोनसार्द्धाष्टाङ्गुलानि *तत्प्रमाणतः* बाह्यस्य चतुरस्रस्य कोणाभ्यां सकाशात्(१) *परिलाञ्छयेत्* ॥ बाह्यचतुरस्रपरिधिरेखास्थित्यर्थम् । *कोणाभ्यामि*तीशाग्नेयाभ्याम् ॥ एवमग्नेयनैर्ऋताभ्यामित्यादि । ततो *दिशं* *प्रत्यष्टसूत्रसम्पातादष्टाजं* *कुण्डम्* । तत्र सूत्रपातनप्रकारः ॥ कोणपार्श्वयोर्ये लाञ्छने तयोर्मिथएकमेकं दिक्षु सूत्रचतुष्टयं बाह्यचतुरस्ररेखास्तु लाञ्छनद्वयं मध्यसूत्राण्येव चतुर्दिक्सूत्राणि एवमष्टसूत्राणि। तत्राष्टसूत्राणां संभवादष्टसूत्राणि पातयेदित्युक्तिः । इदमेव *यथान्यायमि*त्यनेनोक्तम् ॥ अत्र *क्षेत्रोपपत्तिः* । तत्र त्रीणि क्षेत्राणि मध्ये आयातचतुरस्रं पार्श्वयो र्विषमचतुरस्रे । तत्रायतस्यैको भुजः ९ १/६४ ९×१/६४ सवर्णितः ५७७/६४ । द्वितीयो भुजः २६ "तथा पतेत्तद्भुजकोटिघात"इति । अनेन लब्धं क्षेत्रफलं २३४ अङ्गुलानिं३यवाः२यूके । ततो विषमचतुरस्रद्वयस्य भूः २६ मुखं सवर्णितं ५७७/६४ तयोर्लम्बाः ८ ६३/१२८ ८×६२/१२८ सवर्णितः १०८७/१२८ "लम्बेन निघ्नं कुमुखैक्यखण्डमि"ति लब्धं क्षेत्रफलम् । १४८ अङ्गुलानि ६ । यवाः ३ यूकाः एवं द्वितीयस्यापि। सर्व मिलितम् ५३१ अङ्गुलानि ६यवाः। तेन यवद्वयाधिकचतुश्चत्वारिंशदङ्गुलानिन्यूनानि। अष्टभुजसमता च नास्ति। अन्यूनानतिरिक्तक्षेत्रफलानयनेनैव कुण्डसिद्धिरितिचेत्तदा अष्टास्राणि अनेकानि कुण्डानि स्युः।तथाहि षड्विंशविस्तारायामे बाह्यचतुरस्रे अर्द्धयवसहितसप्ताङ्गुलैः कोणपार्श्वतोलाञ्छने सति मध्यायतचतुरस्रस्यैकोभुजः२६ अपरोभुजः११अङ्गुलानि ७यवाः।अस्य क्षेत्रफलम्३०८अङ्गुलानि ४ यवाः। विषमचतुरस्रद्वयस्य भूः२६ मुखं ११ अङ्गुलानि ७ यवाः। लम्बः अर्द्धयवसहितसप्ताङ्गुलानि। अस्यक्षेत्रफलम् १३३ अङ्गुलानि। षड्यवाः। एवमन्यस्यापि सर्वं मिलित्वा क्षेत्रफलं ५७६ तथा सप्तविंशतिविस्तारायामे बाह्य चतुरस्रे षड्यवाः । अष्टाङ्गुलैः कोणपार्श्वतोऽङ्किते आयतचतुरस्रस्य भुजः २७ अपरः सार्द्धनवाङ्गुलानि। तस्यक्षेत्रफलं २५६ विषमचतुरस्रद्वयस्य भूः २७ मुखं सार्द्धनवाङ्गुलानि । लम्बोऽष्टाङ्गुलानि षड्यवाः। एकस्य क्षेत्रफलम् १६० एतावदन्यस्यापि मिलित्वा क्षेत्रफलम् ५७६ एवमष्टाविंशत्यायामविस्तारे बाह्यचतुरस्रे सार्द्धयवसहितदशाङ्गुलैः कोणपार्श्वतो लाञ्छिते मध्यायतचतुरस्रस्यैकोभुजः २८ अपरः सप्ताङ्गुलानि पञ्चयवाः। तत्फलं २१३ विषमचतुरस्रद्वयस्य भूः २८ मुखं सप्ताङ्गुलानि पञ्चयवाः। लम्बा दशाङ्गुलानि सार्द्धयवः। अस्यफलम् २८१ अङ्गुलानि ४ यवाः । एतावदन्यस्यापि। मिलित्वा क्षेत्रफलम् ५७६ एतादृशाः सहस्रशः प्रकाराः सम्भाव्यन्ते नहि तावन्त्यपि सर्वाणि अष्टास्रकुण्डानि । यतः कुण्डस्याननुगतता प्रसज्यते । तेन यत्र तुल्याष्टभुजत्वं तुल्यक्षेत्रफलत्वं च तदेवाष्टास्रं कुण्डमिति सम्प्रदायविदस्त*त्र्यसर्वानुगतप्रकारस्तूच्यते*। "कुण्डेष्टास्रेमध्यसूत्रं चतुर्विंशतिधा भजेत् । एकस्यार्द्धाष्टमांशाद्यमंशमेकं बहिर्न्यसेत् ॥ चतुर्दिक्ष्वथ तन्मानाच्चतुरस्रान्तरं भवेत् । षट्चत्वारिंशदेकांशचतुःषड्यंशसंयुतैः ॥ सप्तांशैर्लाञ्छयेद्बाह्यचतुरस्रास्त्रिपार्श्वतः । दिक्स्वष्टसूत्रसम्पातादष्टास्रं समबाहुकम् ॥" अत्र षड्विंशत्यङ्गुलानि यवत्रयम्। एतद्विस्तारायामं बाह्यचतुरस्रं तच्च सप्ताङ्गुलानि पञ्चयवाः षड्यूका एतन्मानेन कोणपार्श्वयोर्लाञ्छितं तेनात्र मध्यायतचतुरस्रस्यैकोभुजः २६।३/८ सवर्णितः २११/८ अपरोभुजः ११ १/१६ ११−१/१६ सवर्णितः १७५/१६ पूर्ववल्लब्धं क्षेत्रफ° २८८ तत ऊर्ध्वाधोविषमच

(१) अत्रावधौपञ्चमी ।

चतुरस्त्रक्षेत्रस्य सवर्णिता भूः २११ ८ सवर्णितं मुखं १७६ १६ लब्धः २११ ८७ ५६ ६४ सवर्णितः ७१४ ६४ अथैतत् फलम् ११४ एतावदपरस्यापि मिलित्वा क्षेत्रफलम् ५७६ एवमष्टानां भुजानां साम्यमपीति। इममेवाष्टास्रं कुण्डमितिमन्तव्यं चतुर्णां भुजानां साम्यं प्रत्यक्षतः सिद्धम्। अन्येषां तु चतुर्णां "तत् कृत्योर्योगपदं कर्णम्" इत्यनेन प्रकारेणानेयम्। तच्छब्देन कोटिभुजौ ॥ यदिचतुरस्रगौरस्कर्णोपरिस्थितौ तावन्नैतौ ४१४ ६४ ॥ *अथवागमप्रकारान्तरमुच्यते* "कुण्डेऽष्टास्रे मध्यसूत्रं चतुर्विंशतिधा भजेत्। एकत्रिंदशमांशाढ्यं शंशवृध्या च वर्तुलम् ॥ तत्र(४१४।६४)मध्ये दिक्षु एकदानादष्टास्रकं समम्।" अत्रापि अष्टानामपि भुजानां समता। सा तु "द्विद्विनन्देषु वेदैश्च ५९१२२ वृत्तव्यासे समाहते। खखखाभ्रार्कसं १२०००० भक्ते लभ्यन्ते क्रमशो भुजा" इति। भास्कराचार्योक्तमार्गेणानेया। ये तु गणितज्ञस्य लक्षणे "चतुरस्रे मध्यसूत्रं पञ्चांशेन विवर्धयेत् स्वजिनांशाधिकेनाथ तावन्मात्रं बहिर्गतम् ॥ चतुरस्रान्तरं कृत्वा कोणार्धादेषु लाञ्छयेत्। स्थानाष्टके ततः सूत्राण्येकैकं स्यात्तु चिह्नतः ॥ नयेत्तार्तीयतार्तीयं चिह्नं प्रत्यङ्मुखिभान्। तत्सम्पातान्तरस्पृष्ट्वा चतुरस्रे तथा उभे ॥ अष्टास्रं दर्शयेत्कुण्डं तुल्यक्षेत्रफलंसमसि"ति। *तथा* "क्षेत्रव्यासजिनांशकेषु चतुरः सम्बर्ध्य साकं तथा षट्त्रिंशेन लवेन चैकलवकस्यैतद्विलस्यावहेत्। वेदास्रन्युदुदारदिग्गुणयुतं द्विकोणमध्ये कृताष्टाङ्कुष्वष्टगुणैस्तृतीयमिलितैरष्टास्रि कुण्डस्मवेदि"ति। एते अपि न साम्प्रदायिके। यतः क्षेत्रफल यथाकथंचित् सम्पद्यन्ति ॥ एकलाञ्छनतः तृतीयलाञ्छनपर्यन्तं सूत्रपातः क्वचिदप्यनुक्त इति स्वकपोलकल्पितमेतत् ॥ किंच एवंभूते अष्टास्रकुण्डे सति यानिस्थापनस्थानमेव नास्ति सर्वत्र कोणरूपत्वात् कुण्डस्य। ग्रन्थकृदेव वक्ष्यति "नार्पयेत्कुण्डकोणेषु योनिं तां तन्त्रवित्तम" इति *कामिकेतु* "क्षेत्रात् द्वादशकं भागं चतुर्दिक्षु तदन्तर। विन्यस्य तत्प्रमाणेन तुर्यांशमपरं नयेत् ॥ तस्य कर्णप्रमाणेन तद्भुजास्वपि लाञ्छयेत्। तत्राष्टसूत्रसम्पातादष्टास्रं कुण्डमुच्यते" इति ॥ अत्र महान्व्यभिचारः।*अत्र चतुर्वर्गचिन्तामणिकारः* । कर्णशब्दस्य कर्णार्द्धमर्थमुक्त्वा कोणयोरानुकूल्यप्रातिकूल्येनाष्टौ लाञ्छनानीति व्याख्याति स्म। तदयुक्तं तत्प्रतिपादकवचनाभावात्। अतिविषमभुजत्वात् क्षेत्रफलव्यभिचाराच्च।अत्र सर्वत्र क्षेत्रोत्पत्तिवासनाः ग्रन्थगौरवभयान्नप्रपञ्चिताः। तास्तु मत्कृतायां गणितलीलावतीटीकायां सुबोधिन्यां द्रष्टव्याः। "नोपयोग इह मत्कृते श्रमे केवलागमविदां तु यद्यपि ॥ आगमं गणितमप्यवैति यस्तुष्यतु प्रियगुणः स कश्चन ॥ अयमुत्तमो नवकुण्डिका गणितपक्षः। एतत्कुण्डकरणाशक्तः सर्वाणि कुण्डानि चतुरस्राणि वृत्तानि वा कुर्यात् ॥ *तदुक्तमाम्नायरहस्ये* "कुण्डानि चतुरस्राणि वृत्तनानाकृतानि वा" इति। *सोमशम्भुनापि*। "शस्तानि तानि वृत्तानि चतुरस्राणि वासदा" इति। *अन्यत्रापि* "वेदास्राण्येव तानिस्युर्वर्तुलान्यथवा क्वचिदि"ति। *मध्यमस्तु पञ्चकुण्डीपक्षः*। *तदुक्तमाम्नायरहस्ये* "नवपञ्चाप्यथैकं वा कर्तव्यं लक्षणान्वितम्" इति ॥ *सोमशम्भुनापि* "वेदीपादान्तरं त्यक्त्वा कुण्डानि नवपञ्चधा" इति। *तन्निवेशनमप्याम्नायरहस्य एवोक्तम्* "विधाने पञ्चकुण्डानामीशाने पञ्चमं भवेदि"ति। *ज्ञानरत्नावल्यामपि* "दिक्षु वेदास्रवृत्तानि पञ्चमं त्वीशगाचरमि"ति। अत्र वृत्तशब्देन वृत्तार्द्धचन्द्रपद्मानि गृह्यन्ते उक्तचतुरस्रवृत्तविकल्पाभिप्रायेण वा। *सोमशम्भुरपि* "कुर्यात् कुण्डं क्रमादीशे पञ्चममि"ति। *नारदीयेऽपि* "यत्रोपदिश्यते कुण्डचतुष्कं तत्र कर्मणि ॥ वेदास्रमर्द्धचन्द्रं च वृत्तं पद्मनिभं तथा ॥ कुर्यात् कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः। पञ्चमं कारयेत् कुण्डमीशदिग्गोचरं द्विज" इति। *यत्तु* "पञ्चकुण्डीचेन्निर्ऋत्या दिक्ष्वन्तरीशपूर्वयोरि"ति कस्यचिद्वचनम्। तदसम्बद्धं लिखितग्रन्थविरोधात्। *एककुण्डपक्षः* *कनीयान्*। तन्निवेशनमुक्तमाचार्यैः* "अथवा दिशि कुण्डमुत्तरस्यां प्रविदध्याच्चतुरस्रमेकमेवे"ति। *क्वचित्प्रतीच्यामपि तन्निवेशनमुक्तम्* "भुक्तौ मुक्तौ तथा पुष्टौ जीर्णोद्धारे विशेषतः। दीक्षाहोमे तथाशान्तौ वृत्तं वरुणदिग्गतम्" इति। *सोमशम्भुरपि* "पूर्व

पूर्वोक्तं विसृजेद्दोषं चतुर्विंशतिभागतः ॥
एकं भागं बहिर्न्यस्य चतुरस्रं प्रकल्पयेत् ॥ ६४ ॥
अन्तःस्थचतुरस्रस्य कोणार्धार्धप्रमाणतः ॥
बाह्यस्थचतुरस्रस्य कोणाभ्यां परिलाञ्छयेत् ॥ ६५ ॥
दिशं प्रति यथान्यायमष्टौ सूत्राणि पातयेत् ॥
अष्टास्रं कुण्डमेतद्धि सम्यक्सिद्धिप्रदाहृतम् ॥ ६६ ॥
यावान्कुण्डस्य विस्तारः (१)खननं तावदीरितम् ॥

---

वा शिवकाष्ठायां प्रतीच्यां कारयेद्बुधः" इति । तत्रैककुण्डपक्षे चतुरस्रं वृत्तं वा तत्कार्यम् । *तदुक्तं क्रियासारे* "चतुरस्रं भवेत्कुण्डं वृत्तं कुण्डमथापि वा । स्थिरार्चने चलाख्यायां नित्ये हुत-कर्मणि" इति । *पिङ्गलामतेऽपि* "कुण्डमेककरं वृत्तं मेखलाकण्ठनाभिमत् । नित्यकर्मणि दीक्षायां शान्तौ पुष्टौ शुभं समम्" इति । एवं हस्तमात्रं कुण्डमुक्तम् । यदुक्तं *सिद्धान्तशे-खरे* "हस्तमात्राणि सर्वाणि दीक्षासु स्थापनादिषु । नित्यं होमे च सहस्रेकुर्यात्कुण्डानि सर्वदे"ति । *द्विहस्तादिप्रकारस्तूच्यते* । एकहस्तक्षेत्रफले द्विगुणे द्विहस्तस्य, त्रिगुणे त्रिह-स्तस्य, चतुर्गुणंचतुर्हस्तस्येति दशहस्तान्तं ज्ञेयम् । तत्तन्मूलं च तत्तदायामसूत्रं तस्यैव नामा-न्तराणि करणीभुजसूत्रादीनि । तच्च भास्कराचार्यप्रोक्तसूत्रानुसारेण मूलानयनं ज्ञेयम् । तद्य-था । "त्यक्त्वान्त्याद्विषमात्कृतिं द्विगुणयेन्मूलं समे तद्धृते त्यक्त्वा लब्धकृतिं तदाद्यविषमा-ल्लब्धं द्विनिघ्नं न्यसेत् । पङ्क्त्यां पङ्क्तिहृते समेऽन्त्यविषमात्त्यक्त्वाप्तवर्गं फलं पङ्क्त्यां तद्द्वि-गुणं न्यसेदिति मुहुः पङ्क्तेर्दलं स्यात्पदम्" इति । अस्यार्थो ग्रन्थगौरवभयान्नोक्तः । स तु सत्कृतायां लीलावतीटीकायां सुबोधिन्यां सोदाहरणो द्रष्टव्यः । अथवा एकहस्तस्य यत्कोणसूत्रं तदेव द्विहस्तकुण्डस्यायामसूत्रमेवं द्विहस्तकोणसूत्रं चतुर्हस्तकुण्डस्यायामसूत्रं त्रिहस्तकुण्ड-कर्णसूत्रं षड्ढस्तस्य चतुर्हस्तकर्णसूत्रमष्टहस्तस्य पञ्चहस्तकर्णसूत्रं दशहस्तस्येति ज्ञेयम् । *अथ गणितापटुत्वं प्रति दशहस्तान्तं करणी लिख्यते* "एकहस्तदशांशेन चतुस्त्रिंशद्द्विहस्तके" । एतेन ३३ अङ्गुलानि ७ यवाः ४ यूकाः २ लिक्षे । इयती द्विहस्तकरणी । "एकाष्टांशिशसित्तात्रिंत्रसम-स्याथसंयुताः।एकचत्वारिंशदङ्गुलयस्तुल्यास्त्रिहस्तके"।१। "एतेन ४१ अङ्गुलानि ? यवाः ४ यूकाः ४ लिक्षाः इयती त्रिहस्तकरणी। "अष्टचत्वारिंशता स्याच्चतुर्हस्ते करज्यथ । तृतीयांशन्यूनचतुः पञ्चाशत् पञ्चहस्तके ॥" ।२। एतेन ५३ अङ्गुलानि ९ यवाः २ यूके ४ लिक्षाः । इयती पञ्चह-स्तकरणी । "चतुरेकोनविंशोनेनोनषष्टिस्तदुपरे" ।३। एतेन ५८ अङ्गुलानि ? यवाः ? यूका ४ लिक्षाः । इयती षड्ढस्तकरणी। "सप्तहस्तेऽर्द्धयुता त्रिषष्टिः करणी मता । ऊनाः सप्तदशांशकेर्वा वसुपञ्चाष्टहस्तके"।४। एतेन ६७ अङ्गुलानि७ यवाः ७ यूकाः ३ लिक्षाः । इयती अष्टहस्तकरणी। "द्वासप्तत्यङ्गुला कार्या करणी नवहस्तके । ऊनविंशांशद्वयोना दशहस्तेऽङ्गुलयः" । ५ । एतेन ७६ अङ्गुलानि ७ यवाः ७ यूका २ लिक्षे । इयती दशहस्तकरणी । "कुलेषु चतुरस्रे तु स्यात्सोन्यायुक्तमार्गतः । एवं दशान्तकुण्डानां करण्युक्ता यथा स्फुटा" ॥ ६ ॥ ६४ ॥ ६५ ॥ ६६ ॥

अथकुण्डखातमाह—*यावानिति"। कुण्डस्य यावान्विस्तारो भुजसूत्रम् । तावत्प्रमाणः खातः कार्य इत्यर्थः । *कादिमते*–हस्तमात्राणि सर्वाणि कुण्डान्युक्त्वा "प्रोक्तानां सर्वकुण्डा-नामरत्निः खातमानकम्" इति । अरत्निहस्तयोः पर्यायता तेनैवोक्ता यथा, तथा पूर्वमेवदर्शितम् *अन्यत्रापि* "यावन्मानः कुण्डविस्तारउक्तस्तावत् खातस्यापि मानं प्रदिष्टमि"ति । *आ-चार्याश्च*–"विंशत्रिश्चतुरधिका भिरङ्गुलीभिः सूत्रेणाप्यथ परिसृज्य भूमिभागम् । तावद्भिः प्रजनतु

---

( १ ) तावत्खननमीरितम् । इत्यपि पाठः ।

